# मधुवर्षणम्

मौलिक-संस्कृत-काव्यम्

( हिन्दी-अनुवादसहितम् )



लेखक :—
दुर्गादत्त शास्त्री

डा० सत्यव्रत शर्मा, शास्त्री,
व्याकरणाचार्य,
अध्यक्ष, संस्कृत विभाग,
दिल्ली विश्वविद्यालय की
सेवा में सादर भेंट।

# मधुवर्षणम्

मौलिक-संस्कृत-काव्यम्

( हिन्दी-अनुवाद-सहितम् )

लेखकः

दुर्गादत्त शास्त्री
विद्यालङ्कारः, साहित्यरत्नम्,
( राष्ट्रीयपुरस्कारप्राप्तः )

प्रथमसंस्करणम्, आषाढ़, २०२९ मूल्यम्—७.००
जून, १९७२ ( सात रुपये )

प्रकाशक :

रामरक्खीदेवी भारद्वाज, ग्राम—नलेटी,
डाकघर—नलेटी, द्वारा—नैहरनपुखर,
तहसील—देहरागोपीपुर, जिला—कांगड़ा (हि० प्र०)

लेखक की अन्य कृतियां :

| | | | |
|---|---|---|---|
| १. | राष्ट्रपथप्रदर्शनम् | मौलिकं संस्कृतकाव्यम् | वर्ष—१९६७ |
| २. | तर्जनी | ,, ,, ,, | वर्ष—१९७० |

मुद्रक :

देवदत्त शास्त्री, विद्याभास्कर
विश्वेश्वरानन्द वैदिक रिसर्च
इन्स्टीच्यूट प्रैस, साधुआश्रम,
होशियारपुर (पंजाब)।

# समर्पणम्

प्रथमं लिखितं काव्यं 'राष्ट्रपथप्रदर्शनम्' ।
द्वितीयं 'तर्जनी' नाम तृतीयं 'मधुवर्षणम्' ॥
समर्पितानि राष्ट्रार्थं काव्यानीमानि सादरम् ।
अधीत्य सकला लोका लभन्तां ज्ञानमुत्तमम् ॥

लेखक :



दुर्गादत्त शास्त्री

विद्यालङ्कार, साहित्यरत्न, ( राष्ट्रीयपुरस्कारप्राप्त )
ग्राम—नलेटी, डाकघर—नलेटी, द्वारा—नैहरनपुखर,
तहसील—देहरा गोपीपुर, जिला—कांगड़ा (हि० प्र०)

# प्राक्कथनम्

राष्ट्र की उपासना में मेरा यह तीसरा प्रयास है। इस काव्य के सम्बन्ध में मैं अधिक कहना नहीं चाहूंगा। पाठक इसका अध्ययन करके स्वयं इसके सम्बन्ध में अपनी धारणा बनाएंगे। हां, इतना संकेत अवश्य करूंगा कि प्रथम दो काव्यों में कोई शृङ्खलाबद्ध कथा नहीं है, उनका प्रत्येक अध्याय अपने में स्वतन्त्र है परन्तु प्रस्तुत काव्य में एक ही धारावाहिनी कथा है जो सात सर्गों में विभक्त है।

इस काव्य का रूप सुसंस्कृत करने में डा. शिवप्रसाद जी भारद्वाज, प्राध्यापक, साधु आश्रम होशियारपुर ने मुझे जो सुझाव दिये तदर्थ मैं उनका आभारी हूं तथा पीताम्बरदत्त जी शास्त्री ने प्रूफ-संशोधन-कार्य में जो मेरी प्रशंसनीय सहायता की है उसके लिये उनका भी कृतज्ञ हूं। भरसक प्रयत्न करने पर भी मुद्रण में यदि कहीं अशुद्धि रह गई हो तो उसके लिये विद्वानों से क्षमा चाहता हूं।

आषाढ़ संक्रान्तिः, २०२९ दुर्गादत्तः

---

# विषय-सूची



---

# मधुवर्षण-सन्देशः

[ १ ]

रक्तेन वक्षसः पत्रं पत्ये लिखति भामिनी ।
गताय प्रथमे सर्गे जेतुं शत्रून् हिमालये ॥१॥

चिन्तां विहाय गेहस्य युध्यस्व तत्र वल्लभ ।
साधये सकलं साधु मम वेश्मनि निश्चितम् ॥२॥

नारयो वञ्चनं कुर्युः सतर्को भव सर्वदा ।
मातृभूमेर्हितं कर्तुं शत्रून् मारय भीमवत् ॥३॥

पश्चात्तापं करोत्येवं नानेष्यत्तां स संयुगम् ।
अन्यथा खड्गमादायाभविष्यत् सा सहायका ॥४॥

[ २ ]

द्वितीये व्यस्ततां स्वीयां पत्रे लिखति सुन्दरी ।
गत्वा गृहे गृहे कोषमर्जयति शुभानना ॥५॥

अन्यानि बहुवस्तूनि प्रहेतुं सैनिकान् प्रति ।
कारयन्ती वयस्याभिर् व्यस्तातिष्ठत् प्रतिक्षणम् ॥६॥

व्रतानि चाचरत्येवं यावद् भर्ता रणस्थले ।
भूमौ स्वप्स्यति तावत् सा चन्द्रवेणीधराङ्गना ॥७॥

[ ३ ]

तृतीये पार्वतीरोषाद् विभ्यती धूर्जटेस्तथा ।
संयाचते पतिं वीरं रक्षितुं स्वं हिमालयम् ॥८॥

[ ४ ]

अधिक्षिपति शत्रून् सा चतुर्थे दुःखिता भृशम् ।
विस्मृत्योपकृतीः सर्वा आक्राम्यन् भारतं खलाः ॥९॥

शस्त्रास्त्रनिर्मितौ शीघ्रं भवेम स्वावलम्बिनः ।
तदैव रक्षितुं राष्ट्रं शक्नुमो नान्यथा पते ॥१०॥

सज्जिता विविधैरस्त्रैः सेना नो भवतु द्रुतम् ।
यस्या भयेन संसारः कम्पतां वल्लभानिशम् ॥११॥

नारिः कदापि मोक्तव्यो हस्तायातो भवेद्यदि ।
पृथ्वीराजो दयां कृत्वा पश्चात्तापाऽन्वितोऽभवत् ॥१२॥

पाकस्य सूचयत्येवं सती भूयो विखण्डनम् ।
केवलं दिक्समास्वेव ज्योतिर्विद्याविचक्षणा ॥१३॥

[ ५ ]

अलिखत् पञ्चमे नारी "वीरभोग्या वसुन्धरा" ।
बलिष्ठं भारतं तस्माद् जायतां मानवृद्धये ॥१४॥

एकतायां निबद्धाश्चेन्न कश्चिज्जेतुमर्हति ।
तस्मात्परस्परं भेदो नास्तु भारतवासिषु ॥१५॥

कर्तव्यं सैनिकाः स्वीयं पालयन्तु दिवानिशम् ।
स्वस्वस्थानस्थिताश्चान्ये सन्तु कर्मपरायणाः ॥१६॥

[ ६ ]

शत्रुभिः पीडिते राष्ट्रे वर्तते यादृशी स्थितिः ।
षष्ठे सा विशदं ब्रूते सर्गे मर्मस्पृशि ध्रुवम् ॥१७॥

धेनवः कुञ्जरा अश्वा विरक्ता राष्ट्रपीडया ।
अन्याऽपि सकला सृष्टिर्विकला दृश्यते पते ॥१८॥

दर्शयित्वा स्वशौर्यं त्वं सकलान् सुखिनः कुरु ।
हत्वा शत्रून् समायातो लप्स्यसे मानमुत्तमम् ॥१९॥

[ ७ ]

सप्तमे स्वागतं ब्रूते यथेयं कर्तुमिच्छति ।
वल्लभोऽस्या यदा जित्वा वेश्म प्रत्यागमिष्यति ॥२०॥

परन्तु भाषते स्पष्टं नाङ्गस्पर्शः प्रदास्यते ।
आगच्छसि न चेद् भर्तर् जित्वा शत्रून् रणस्थले ॥२१॥

---

# A GIST

One thousand nine hundred and sixtytwo—a clouded night—a lady plunges into the past—thinks of the nights she passed in the arms of her husband—thunder, lightning—jolted into the present—

Worries about her husband who is at the front–my man must be fighting heroically—the enemy is cunning—how they took us shouting slogans of 'bhai-bhai' and all the time preparing for the war—but my husband is a brave man, a clever man———danger is there—so what ? —danger is everywhere—death is inescapable—why not die fighting for the motherland————one and all vigilant to-day—victory will be ours—contributing in their own small way———I'll look after my in-laws with greater care—make a greater effort for the defence fund———why would'nt they let me go and participate in active fighting———India has had its 'ranis of Jhansi'.

How she fought—we could be free a hundred years back—Gandhi and Nehru would'nt have had to go to gaol—oh ! what must my husband be going through

so far away——I could never be happy away from him—for whom should I dress—I'll use no make-up use no ornaments till he comes———what spirit has this war enthused in our people—how they are donating their ornaments—the loving gifts that brothers gave to sisters and husbands to wives——how they boast of things their men must be doing at the front—oh ! that new-wed was just funny—she could'nt say a word, but her eyes were full of praise———the prayers today are all directcd to a happy outcome of thr war———

———Himalaya is the home of gods—Parvati is its star-eyed daughter—if the enemy is'nt thrown out she may get annoyed—she is the only one to whom ladies can turn——How Lord Shiva loves her——If Parvati is annoyed, he also may get angry—and O God ! what anger and what would'nt he do to appease the lady of his heart—see what he did to Daksha Prajapati—no, no, the Himalayas has to be saved even if I lose my husband——how somewhere in the Himalayan ranges king Dileepa offered his own body to the mythical lion to save the cow———

———Evil has to be punished—the Kaurvas would never see reason—these ungrateful people have forgotten all we did for them———we have to be

more careful—peace without power is meaningless and short-lived—we have to be self-sufficient in all war-material—what heights of advancement in science had our ancestors achieved—-Shrikrishna's *Chakra* must have been a missile of today and Ramayana's *Pushpak* a space-ship—why could'nt we reach the same stage again—we could and then our armies and arms will be the best——this War has opened our eyes—none should catch us napping again—may be Pakistan also threatens us tomorrow—we'll then be ready for them—we have to be united—Indians first and Indians last—these quarrels over languages and regions are'nt good—we could best serve the motherland by burying that hatchet.

——These differences weaken us as a Nation—and all boss over the weak—how sad and meaningless is life to-day——not only the living, the natural objects also are sad—the skies are all the time over-cast with dust-laden clouds———the Sun always is brighter after a rainy day—this Nation has seen worse days——every struggle gives birth to a strong and wise leader———in near future, a Lady shall come to the fore here—we'll grow stronger and stronger under her leadership—the whole world will be proud of her————

——Nothing is to be for ever—these days will also go—and then my man, my husband will be back with me—victorious when he comes, people will jealously see me moving about with him——but he touches me only if he puts up an heroic fight—to him also my body shall yield any pleasure only in that case—— how he'll enjoy resting on my breast—ah ! and then these clouds—the rains will come with all the pleasantary—the greenary will be honey-suckle and manna dew—the dew drops will be "Madhu-Varshanam" —Life will be all gay and lovely and lively.

These are the thoughts the Lady words in the letter, she is sending her husband somewhere at the front—

---

# अथ प्रथमः सर्गः



काचित्कान्ता लिखति समरे युध्यमनाय पत्रं
पत्ये स्वाय प्रचुरबलिने संयुगेऽग्रेसराय ।
किञ्चित्स्वान्ते स्मरति विकलाऽपूर्वभावान् वहन्ती
नेत्रे रक्ते द्रुतमथ मनो लक्ष्यते लेखिकायाः ॥१॥

कोई नारी लड़ाई में सदा आगे रहने वाले तथा युद्धक्षेत्र में लड़ रहे बहुत बलवान् अपने पति के लिये पत्र लिख रही है। अनोखे विचारों को धारण करने वाली व्याकुल वह स्त्री अपने अन्तःकरण में कुछ सोच रही है। उसके नेत्र लाल हैं और मन उतावला प्रतीत हो रहा है ॥१॥

ध्यायं ध्यायं लिखति चतुरा लेखनीं भूषयन्ती
मुद्रा तस्या भवति च यथा प्रस्तुता विग्रहार्थम् ।
काये कम्पो हृदि घनतमः सङ्कटं वीक्ष्य भूमेः
पत्रेणासौ मनसि निहितं भावमाविष्करोति ॥२॥

अपनी लेखनी को सजाती हुई वह चतुर नारी बार-बार ध्यान करके लिख रही है। उसका आकार ऐसा है मानो कहीं

युद्ध करने के लिये जा रही हो। मातृभूमि के संकट को देख कर उसका शरीर कांप रहा है और दिल में घना अंधेरा छाया हुआ है। वह पत्र के द्वारा अपने मन के भाव प्रकट कर रही है ॥२॥

**रूपं तस्या विचलति यथा गेषते नष्टवस्तू-**
**न्यादत्ते सा क्षिपति च पुनर् लेखनीं स्त्रीयहस्तात् ।**
**मस्या लेख्यं नहि नहि मया स्वासृजा शोभनं स्या-**
**देवं मत्वा प्रथमलिखितं कर्गलं क्षिप्तमासीत् ॥३॥**

उसका आकार इस प्रकार विचलित हो रहा है मानो वह खोई वस्तुओं को ढूंढ रही हो। वह कभी अपने हाथ में कलम को ले रही है और कभी उसे फैंक रही है। क्या मुझे स्याही से लिखना चाहिये ? नहीं नहीं, अपने खून से लिखना ही अच्छा रहेगा। इस प्रकार सोच कर उसने पहले लिखे हुए कागज को फैंक दिया ॥३॥

**भूमिं नत्वा शिरसि रजसो रेणुमाचष्ट कृत्वा**
**पूज्यास्माकं भवसि वसुधेऽवेक्ष्य दुःखं त्वदीयम् ।**
**दुष्टोऽत्यन्तं भवति मनुजो यस्य चित्तं न दूनं**
**कृच्छ्रं त्वत्कं भवतु गलितं प्राणदानेन नोऽम्ब ॥४॥**

उसने भूमि को नमस्कार करके धूलि का एक कण सिर पर रखा और कहा—हे मातृभूमि, तू हमारी पूज्य है। तेरे दुःख को देख कर जिस मनुष्य के हृदय को ठेस नहीं पहुंचती

है वह बहुत ही दुष्ट होता है। हे माता, तेरा कष्ट हमारे प्राणों के बलिदान से भी दूर हो जाना चाहिये ॥४॥

आदायैकं स्वकरकमले तीक्ष्णधारं लवित्रं
वक्षोमध्ये त्रिकुलरमणी गाढमर्मिं चकार ।
कृत्वा रक्तं हरितपुटके लेखनीं पञ्चशाखे
मङ्क्ष्वारेभे ज्वलनतुलनांल्लेखितुं सार्थवर्णान् ॥५॥

उसने अपने हाथ में तेज धार वाला एक चाकू लिया और उससे अपनी छाती में एक गहरा घाव कर लिया। एक हरे दोने में घाव के खून को डाला और कलम हाथ में ले ली। फिर वह शीघ्र ही आग के समान चमकीले सार्थक अक्षरों को लिखने लग पड़ी ॥५॥

पत्रं भर्तर् लिपिकृतमिदं वक्षसो रक्त-मस्या
रात्रेरस्याः प्रियतम मया पश्चिमेषु क्षणेषु ।
प्राधीत्यैतद् गहनमनसा सावधानं पते मे
पूर्णं कृत्वा मम सुवचनं भारते मानमेहि ॥६॥

हे पतिदेव, रात्रि के अन्तिम क्षणों में अपनी छाती के खून की स्याही से मैंने यह पत्र लिखा है। हे पतिदेव, आप सावधान हो कर बड़ी गहराई से इस पत्र को पढ़ें और मेरे वचन को पूरा करके भारत में मान को प्राप्त करें ॥६॥

येयं रात्रिः परमसुखदा नाथ साकं त्वया मे
संलापैस्तैः श्रवणमधुरैः सर्वदा गच्छति स्म ।
साद्य क्रूरा भवति महती किं न जानासि सर्वं
लोके गुप्तं नहि मतिमतां वर्तते कान्त किञ्चित् ॥७॥

हे पतिदेव, जो यह रात सदा ही आप के साथ कानों को मीठा लगने वाली बातों को करते हुए बीतती थी वही रात आज सचमुच क्रूर बन कर सामने खड़ी है। क्या आप सब कुछ जानते नहीं हैं? संसार में बुद्धिमानों से कोई बात छिपी हुई नहीं रहती ॥७॥

एतद् ज्ञातं सरलहृदयैर्मानवैर्भारतीयैः
सीमास्माकं चरणमथिताऽरातिभिर्मित्रवेषैः ।
"भिन्नो नाहं" वितथवचनैः सख्यमापादयद्भिः
पापैरन्तर्विमलहृदयं बाह्यतो दर्शयद्भिः ॥८॥

सरल हृदय वाले भारतवासियों को यह प्रतीत ही है कि मित्र का वेश रखने वाले, "मैं आपसे भिन्न नहीं हूं" इस प्रकार के झूठे वचनों से मित्रता दिखाने वाले, अन्दर पाप भरे हुए और बाहर से निर्मल हृदय को दिखाने वाले शत्रुओं ने हमारी सीमा पर पैर रख दिया है ॥८॥

ज्ञातुं शक्तः प्रिय न सुजनो मानसं दुर्जनानां
सोऽयं वेत्ति स्वहृदयसमं संसृतेः सौम्यरूपम् ।
एवं दुष्टश्छलयति सदा सज्जनान् स्वच्छचित्तान्
सर्पोऽसर्पो न भवति पते तर्पितो दुग्धपानैः ॥९॥

भला आदमी दुष्टों के मन को नहीं पहचान सकता। वह अपने दिल के समान ही सारे संसार को साफ समझता है। इस प्रकार दुष्ट आदमी सदा ही निर्मल दिल वाले लोगों को ठगता है। हे पतिदेव, दूध पिलाने से भी सांप अपने स्वभाव को नहीं छोड़ता है ॥९॥

नैवास्माभिः प्रियतम कृतं शोभनं तिब्बतेऽस्य
स्वच्छस्वान्तैः कपटरहितैः स्वीकृतो योऽधिकारः ।
आनीतोऽसौ स्वनिकटमहो ! स्वाङ्घ्रिदंशाय दूराद्
दत्त्वा दुग्धं विषधरविषं वर्धितं कान्त नूनम् ॥१०॥

हे पतिदेव, कपट से सदा दूर रहने वाले, निर्मल अन्तः-करण वाले हम भारतीयों ने तिब्बत पर जो उसका अधिकार स्वीकार कर लिया यह अच्छी बात नहीं हुई। हम शत्रु को अपना पैर डंसाने के लिये स्वयं ही समीप ले आए। मानों हमने सांप को दूध पिला कर उसके विष को बढ़ा दिया ॥१०॥

एतेनासीद् भुवनविदितं प्रेम कान्तास्मदीयं
सत्कारोऽत्र प्रियतम कृतो बन्धुवत्तस्य चाओः ।
ऐणेयेऽसौ कपटहृदयो लक्षितो व्याघ्र एव-
च्छद्माच्छन्नं द्रुततरमिमं नग्नतां त्वं नयस्व ॥११॥

इससे हमारा जो स्नेह था उसे सारा संसार जानता था। चाऊ जब यहां आया तो हमने एक मित्र के समान उसका सत्कार किया। परन्तु यह तो मृगचर्म में ढका कपटी बाघ ही निकला। हे पतिदेव, कपट से ढके हुए इस शत्रु को शीघ्र ही नंगा करो ॥११॥

औदार्यं न प्रिय हितकरं मानवे पापलिप्ते
तत्तु श्रेष्ठं भवति मतिमन् केवलं सज्जनेषु ।
एतत्सिद्धं भवति भुवने पाण्डवानां प्रसंगा-
त्तेषां धृष्टा न किल कुरवोऽमानयन् साधुभावम् ॥१२॥

हे प्रियतम, पापी मनुष्य के साथ उदारता दिखाने का कोई लाभ नहीं। वह तो सज्जन पुरुषों में ही लाभदायक होती है। संसार में यह बात पांडवों के प्रसंग से मालूम होती है। धूर्त कौरवों ने उनकी सज्जनता का आदर नहीं किया था ॥१२॥

जिह्वायुग्मं भजति भुजगस्तादृशः शत्रुरेष
"भ्राता भ्राता" वदति मधुरं सच्छलं त्वेकयाऽस्मान् ।
अन्यां कृत्वा गरलतरलां दंशमस्मासु धत्ते
दुष्टेनैवं प्रियतम वयं वाञ्चिताः साधुवृत्ताः ॥१३॥

जैसे सांप की दो जिह्वाएं होती है उसी प्रकार इस शत्रु की भी दो जीभें हैं। एक जीभ के साथ तो यह छलपूर्वक हमें भाई-भाई बोलता है और दूसरी में विष भर कर हमें डंग मारता है। हे पतिदेव, इस दुष्ट ने सज्जन स्वभाव वाले हम लोगों को ठग लिया ।।१३।।

पश्चात्तापो न भवति परं संसृतौ शूरपुंसां
ते कुर्वन्ति प्रियतम तथा तीव्रबुद्धेः प्रयोगम् ।
तेषां पादो द्रुततरमिवाभीलशीर्षे स्थितः स्याद्
भर्तः शीघ्रं कुशलधिषणां सङ्कटेऽस्मिन् प्रयुङ्ग्धि ।।१४।।

हे पतिदेव, संसार में बहादुर पुरुष पश्चात्ताप नहीं करते हैं। वह इस प्रकार अपनी तीव्र बुद्धि का प्रयोग करते हैं जिससे शीघ्र ही संकट पर नियंत्रण पा लेते हैं। हे प्रिय, आप भी इसी प्रकार संकट में अपनी तीव्र बुद्धि का प्रयोग करें ।।१४।।

चिन्ता कार्या प्रियतम न मे शोभना स्वे गृहेऽहं
सर्वं कार्यं सुनिपुणतया सद्मनोऽहं करोमि ।
पित्रोः सेवां विमलमनसा सावधानाऽऽचरामि
क्षिप्रं भूमे रिपुरपि पते मर्दनीयो भवद्भिः ।।१५।।

हे पतिदेव, आप चिन्ता न करें, मैं अपने घर में अच्छी हूं, घर के सारे काम को अच्छे ढंग से कर रही हूं। माता-पिता

की सेवा भी बड़ी सावधानी से कर रही हूं। हे प्रिय, आप मातृभूमि के शत्रु को शीघ्र ही मार भगाएं ॥१५॥

चेतोवृत्तिर्नहि भवति चेत्साध्यकार्ये नरस्य
क्वासौ वोढुं प्रभवति तदा कार्यभारं सुखेन।
तस्माच्चित्तं भवतु भवतः स्वीयकार्यप्रसक्तं
चिन्तां हित्वा भव मम पते सावधानः समीके ॥१६॥

हे पतिदेव, यदि मनुष्य का मन अपने काम में ठीक ढंग से न लगा हो तो वह काम के भार को आसानी से कैसे उठा सकता है? इसलिये आप का मन अपने काम में ही लगा हुआ होना चाहिये। आप घर की चिन्ता को छोड़ कर युद्ध में सावधान होकर रहें ॥१६॥

नायं कालो भवति सुपते वेश्मनश्चिन्तनानां
सर्वो देशो विकलहृदयः पश्यति त्वां सुवीरम्।
एकाग्रेण प्रबलमनसा राष्ट्ररक्षां प्रकुर्या-
श्छिन्ने मूले प्रियतम कुतः पत्रशाखादिसत्ता ॥१७॥

हे पतिदेव, यह समय घर की चिन्ता का नहीं है। व्याकुल हुआ सारा देश तुझ बहादुर को देख रहा है। तुम एकाग्र और बलवान् मन से राष्ट्र की रक्षा करो। यदि मूल ही कट गया तो पत्ते और शाखाएं कहां रहेंगी? ॥१७॥

युद्धक्षेत्रे क्षणमपि किल ध्यानभङ्गो न साधु-
श्छिद्रान्वेषी भवति तु रिपुर्यत्र तत्र प्रहर्तुम् ।
तस्माच्चिन्तां परिहर पते मामकीं वेश्मनो वा
गर्वं हर्तुं दयित समरे वैरिणां स्याः सतर्कः ॥१८॥

हे पतिदेव, युद्ध के मैदान में एक पल के लिये भी ध्यान टूटना अच्छा नहीं होता। शत्रु तो प्रहार करने के लिए जहां तहां त्रुटि को ढूंढता ही रहता है। इसलिये आप मेरी या घर की चिन्ता को छोड़ दें और युद्ध में शत्रु का घमंड तोड़ने के लिये सावधान हो जाएं ॥१८॥

प्रातःकाले प्रतिदिनमहं नित्यचर्यां प्रकुर्वे
पश्चात्स्नात्वा नियममनुगा मन्दिरं यामि कान्त ।
तत्र स्थित्वा सकलजगदाधारमीशं नमामि
प्रत्यागत्य प्रिय च सदने व्यापृताहं भवामि ॥१९॥

हे पतिदेव, मैं प्रतिदिन प्रातःकाल अपनी नित्यचर्या को पूरा करती हूं, फिर स्नान कर के नियमानुसार मंदिर को जाती हूं। वहां सारे संसार के स्वामी भगवान् को नमस्कार करती हूं और फिर वहां से लौट कर घर के काम में जुट जाती हूं ॥१९॥

विस्मर्तव्यः प्रिय न भगवान् संसृतेर्हेतुभूत-
स्तस्याधीनं भवति सकलं स्थावरं जङ्गमं च ।
प्रभ्वादेशे भ्रमति निखिलं चक्रमेतच्च सृष्टेर्
दद्यादीशः सुविमलयशो युद्धभूमौ त्वदर्थम् ॥२०॥

हे पतिदेव, संसार के कारण भगवान् को कभी नहीं भूलना चाहिये। यह चर और अचर सारी सृष्टि उसके ही अधीन है। यह संसार का सारा चक्र ईश्वर की आज्ञा से ही घूमता है। वह प्रभु युद्ध-भूमि में आपको निर्मल यश प्रदान करे ॥२०॥

**मन्यन्ते ये सकलजगतः कारणं नैव विष्णुं**
**तेषां बुद्धिर्भवति पतिता नास्तिकानां भुवीह ।**
**एते पापाः दयित भुवने दुःखदाः सज्जनानां**
**कृत्वोद्योगं भविकमतिभिः स्मारणीयः प्रभुस्तान् ॥२१॥**

जो लोग सारे संसार के कारण विष्णु भगवान् को नहीं मानते हैं उन नास्तिक लोगों की बुद्धि इस संसार में पतित होती है। पापी नास्तिक लोग सज्जनों के लिए सदा दुःखदायी होते हैं। अच्छी बुद्धि वाले लोगों को चाहिये कि वह उद्योग कर के उन लोगों को उस प्रभु का स्मरण करवाएं ॥२१॥

**गोविन्दे चेद् दयित भवति प्रत्ययः सत्यसिक्तो**
**धाता दत्ते प्रियतम तदा कार्यसिद्धिं नरेभ्यः ।**
**धृत्वा चित्ते सकलजगतः कारणं देवदेवं**
**हृत्वा कष्टं स्वजननभुवो वल्लभायाहि वेश्म ॥२२॥**

हे पतिदेव, यदि ईश्वर पर सच्चा विश्वास हो तो वह निश्चय ही लोगों के काम सिद्ध करता है। इसलिये संसार के कारण देवताओं के देवता भगवान् को अपने दिल में धारण

करके मातृभूमि के कष्ट को दूर करो और फिर शीघ्र ही घर चले आओ ॥२२॥

प्राचीनेऽपि प्रिय दितिसुता देवतानामकुर्वन्
कष्टं घोरं विविधविधिभिश्चेतसा दूषितेन ।
चक्रे नाशं मनुजवपुषा राक्षसानां स्वयंभू-
रेवं भर्तश्छलबलवतां गर्वहन्ता त्वमेधि ॥२३॥

हे पतिदेव, प्राचीन काल में भी दैत्यों ने अपने मलिन मन के कारण देवताओं को अनेक प्रकार से भयानक कष्ट दिये थे। तब ईश्वर ने मानव शरीर धारण करके राक्षसों का नाश किया था। इसी प्रकार तुम भी छलबल रखने वाले इन शत्रुओं के घमंड को तोड़ो ॥२३॥

युद्धे जीयास्त्वमिति मनसा पूजयेऽहं भवानी-
मायुष्कामा दयित भवतः शङ्करं तोषयामि ।
सस्यश्यामा विविधमणिभिर्भूषिता मातृभूमिर्
हस्ताच्छत्रोः कथमपि पते नाप्नुयान्मानभङ्गम् ॥२४॥

हे पतिदेव, आपकी युद्ध में जीत हो इस भावना से मैं पार्वती की पूजा करती हूं और आपकी आयुवृद्धि के लिये शिव की उपासना भी करती हूं। हे प्रिय, खेती से हरी-भरी अनेक मणियों से सजी हुई इस मातृभूमि का शत्रु के हाथ से किसी भी प्रकार अपमान नहीं होना चाहिए ॥२४॥

शक्तेः पूजा भवति शुभदाऽमोघशक्तेरवाप्त्यै
शत्रून् हन्तुं मलिनहृदयान् हर्तुमिच्छून् भुवं नः ।
शुम्भं दैत्यं विपुलबलिनं तादृशं वा निशुम्भं
हत्वा देवी सकलजगतो भारमल्पं चकार ॥२५॥

हे पतिदेव, दूषित चित्त वाले हमारी भूमि को हरने की इच्छा वाले शत्रुओं को मारने के हेतु अपार शक्ति प्राप्त करने के लिये शक्ति की पूजा बहुत ही शुभकारक होती है। उस देवी ने भारी बल को धारण करने वाले शुंभ और निशुंभ दैत्य को मार कर सारे संसार का भार हल्का किया था ॥२५॥

दैत्या अस्या अशुभहृदया मानहानिं यदैच्छन्
सिंहारूढा भयदवदना खड्गमागृह्य हस्ते ।
नाशं तेषां प्रिय कृतवती संसृतिर्मोदमाप
स्मृत्वा तस्याः कुरु विशसनं वैरिणां संप्रहारे ॥२६॥

दूषित हृदय वाले दैत्यों ने जब शक्ति (चंडी) के मान को कुचलना चाहा तो क्रोध से भयानक मुखवाली देवी ने शेर पर चढ़ कर और हाथ में तलवार लेकर उनका नाश कर दिया और सारी सृष्टि में प्रसन्नता की लहर दौड़ गई। हे पतिदेव, आप उस चंडी को याद करके युद्ध में शत्रुओं का नाश करें ॥२६॥

दुष्टा एते न दयित ।विदुर् भारतस्याङ्गनानां
शौर्यं श्लाध्यं सकलभुवने विद्यते पूर्वकालात् ।
नार्यः सर्वाः स्वरिपुरुधिरं पातुकामाः कवोष्णं
कोपग्रस्ताः सुभग समयं कामयन्ते सुवीराः ॥२७॥

हे पतिदेव यह दुष्ट इस बात को नहीं जानते हैं कि भारतवर्ष की नारियों की शूरवीरता प्राचीनकाल से ही सारे संसार में प्रशंसा प्राप्त करती आई है। इस देश की सभी वीर नारियां अपने शत्रु का कुछ कुछ (ताजा) खून पीने के लिये समय की प्रतीक्षा में बैठी हैं ॥२७॥

मन्ये नित्यं दयित पितरौ मन्दिरे देवतुल्यौ
यावच्छक्यं भवति सुपतेऽभ्यर्चनामाचरामि ।
वेद्मि श्वश्रूममलमनसा पार्वतीं शम्भुतुल्यं
पूज्यं तातं सरलहृदयं प्रत्ययं मे कुरुष्व ॥२८॥

हे पतिदेव, मैं घर पर माता पिता को देवताओं के समान समझती हूं। जहां तक मुझ से हो सकता है मैं उनकी सेवा करती हूं। मैं सास को पार्वती के बराबर समझती हूं और सरल हृदय, पूज्य पिता (ससुर) को महादेव के समान समझती हूं। आप मेरा विश्वास करें ॥२८॥

नारी येह स्वपतिपितरौ नाद्रणोति प्रगल्भा
निन्द्या भर्तर् भवति भुवने मङ्गलं नास्ति तस्याः ।
मातुः पुत्रं चपलवचनैरात्मसात्सा करोति
श्वश्रूर् दूरे भवति च वधूर्वेश्मनः स्वमिनी स्यात् ॥२९॥

हे पतिदेव, जो वाचाल नारी इस लोक में अपने पति के माता-पिता का आदर नहीं करती है उसकी सब जगह निन्दा होती है और उसका कभी कल्याण नहीं होता। सास ससुर का अनादर करने वाली ऐसी नारियां अपनी चापलूसी से माता के पुत्र को अपना बना लेती हैं। तब सास बेचारी दूर हो जाती है और बहू घर की मालकिन बन बैठती है ॥२९॥

हत्वा शत्रूनपगतभयां मातृभूमिं प्रकुर्या
दुष्टः शत्रुः सपदि भवता दण्डनीयः स एवम्।
कुर्याद् दृष्टिं न स हिमगिरौ भूय एवं कदाचि-
त्तृप्तां भूमिं स्वरिपुरुधिरेणाचिरात्त्वं विधेहि ॥३०॥

शत्रुओं को मारकर मातृभूमि के भय को दूर करो। उस शत्रु को जल्दी ऐसा दण्ड दो कि वह फिर कभी भी हिमालय पर दृष्टि न डाले। आप शीघ्र ही अपने शत्रु के खून से मातृभूमि को तृप्त करें ॥३०॥

एषा भूमिर्भवति तृषिता याचते शत्रुरक्तं
भाग्येनैव प्रियतम रिपुश्चागतः सन्निधेऽस्याः।
ध्यानं देयं सबलमनसा जीवितो नैष गच्छे-
त्तृप्तामेनां कुरु मम पते पाययित्वारिरक्तम् ॥३१॥

हे प्रिय, यह मातृभूमि प्यासी है और अपनी प्यास बुझाने के लिये शत्रु का खून मांगती है। शत्रु भाग्य से ही आज इसके

निकट आया है। आप अपने मन को बलवान् बना कर इस प्रकार ध्यान दें कि यह शत्रु जीता न जाने पाए। उसका खून पिला कर इस मातृभूमि को तृप्त करो ॥३१॥

**दर्शं दर्शं तव भुजबलं कान्त शत्रुर्जघन्यः**
**कर्णस्पर्शं स भजति यथा साहसं दर्शयस्व ।**
**शस्त्राघातैं रिपुबलवधे तिष्ठ कौन्तेयवत्त्वं**
**जित्वा शत्रून् गृहमधिगतं त्वामहं सत्करिष्ये ॥३२॥**

हे पतिदेव, ऐसा हौंसला दिखाओ कि वह नीच शत्रु आप की भुजाओं की शक्ति को देख कर अपने कानों से हाथ लगाए कि मैं आगे के लिये कभी ऐसा नहीं करूंगा। तुम अपने शस्त्र के वारों से शत्रु की सेना का वध करने में अर्जुन के समान बल दिखाओ। शत्रुओं को मार कर जब तुम घर आओगे तो मैं आप का स्वागत करूंगी ॥३२॥

**कौन्तेयोऽसौ रिपुबलहरो युद्धभूमावमुह्यद्**
**गीता तस्मै भुवनविदिता श्राविता माधवेन ।**
**एवं तस्मै दितिजरिपुणा स्मारितः क्षात्रधर्मो-**
**गाण्डीवं स्वं प्रियतम तदोत्तोलयामास सोऽभ्रे ॥३३॥**

हे पतिदेव, शत्रुओं का संहार करने वाला अर्जुन जब युद्धभूमि में मोह में फंस गया तो श्रीकृष्ण भगवान् ने उसे संसार में प्रसिद्ध गीता का उपदेश दिया और इस प्रकार उन्होंने उसे क्षत्रिय धर्म की याद दिलाई। तब अर्जुन का मोह दूर हो गया और उसने अपने गांडीव धनुष को आकाश में उठाया ॥३३॥

एवं तेन प्रियतम तदोज्जासनं कौरवाणां
कृत्वा भूमेर्वृजिनतमसो नाशनं संव्यधायि ।
धृत्वा शस्त्रं कुरु विशसनं वैरिणां त्वं स्वशक्त्या
गीतां मत्वा रुधिरलिखितं पत्रमेतन्मदीयम् ॥३४॥

हे पतिदेव, इस प्रकार अर्जुन ने कौरवों का विनाश करके भूमि से पाप रूपी अन्धकार को मार भगाया। आप रुधिर से लिखे मेरे इस पत्र को ही गीता समझें और हाथ में शस्त्र ले कर अपने शत्रुओं का शीघ्र ही संहार करें ॥३४॥

नैवाहूतं दयित समरं स्वेच्छया त्वागतं भो-
आयातोऽयं भवति च रिपुर्निर्बलान् कान्त मत्वा ।
दृष्ट्वा शौर्यं वरद भवतो धारणाऽस्य मृषा स्यात्
पश्चात्तापे पतति स यथा तादृशं त्वं यतस्व ॥३५॥

हे पतिदेव, हमने युद्ध बुलाया नहीं है, यह तो हम पर थोपा गया है। यह शत्रु हमें दुर्बल मान कर ही आया है। हे प्रिय, आप की बहादुरी को देख कर जिस प्रकार इस की धारणा झूठी हो जाए और यह पश्चात्ताप में पड़ जाए, तुम ऐसा ही यत्न करो ॥३५॥

"बापू" गान्धेर्विविधकृतिभिर् मातृभूमिः स्वतन्त्रा
न स्यात् सेयं रिपुकरगता प्राणनाशेऽपि कान्त ।
प्राणान् वीरा अजुहवुरिमां बन्धनान्मोचयन्तः
स्मृत्वा तेषां सुशुभचरितं त्वं कुरुष्वात्मदानम् ॥३६॥

हे पतिदेव, बापू गान्धी के अनेक प्रयत्नों से जो यह मातृभूमि स्वतन्त्र हुई है, यह प्राणों का नाश होने पर भी शत्रु के हाथ में नहीं जानी चाहिये। इस मातृभूमि को परतंत्रता के बंधन से छुड़ाते हुए जिन लोगों ने अपने प्राणों का बलिदान किया है तुम उनके अच्छे चरित्र की याद करके अपना बलिदान कर दो ॥३६॥

यैर्यैर्वीरैः स्वजननभुवे जीवनं कान्त दत्तं
लोकन्ते तेऽखिलगातिविधिं साम्प्रतं स्वर्गलोकात् ।
भूयान्नास्या रिपुकरगता बल्लभैका वितस्तिर्
येन स्याम प्रिय नहि वयं पूर्वजानां कृतघ्नाः ॥३७॥

हे पतिदेव, जिन-जिन बहादुरों ने मातृभूमि के लिये अपने प्राणों का बलिदान किया है वह स्वर्ग लोक से तुम्हारी सारी गतिविधि को देख रहे हैं। इस मातृभूमि का एक चप्पा के बराबर भी भाग शत्रु के हाथ में नहीं जाना चाहिये। ऐसा न हो कि हम अपने बुजुर्गों के कृतघ्न कहलाएं ॥३७॥

नेतारो ये प्रिय समभवन् जन्मभूमेः सुवीराः
सङ्घर्षं ते समधिकतमं मातृभूम्या अकुर्वन् ।
स्वाधीन्यार्थं सकलमपि तैरर्पितं दानवीरैर्
वृत्तं तेषां भवति परमं प्रेरकं देशभक्तेः ॥३८॥

हे पतिदेव, जन्मभूमि के जो बड़े-बड़े बहादुर नेता हुए हैं उन्होंने मातृभूमि की मुक्ति के लिये भारी संघर्ष किया। उन

दानवीरों ने स्वाधीनता के लिये अपना सब कुछ अर्पण कर दिया। उनका चरित्र देशभक्ति की बड़ी प्रेरणा देता है ॥३८॥

लालः पालः प्रियतम तथा बालगङ्गाधराद्या--
अन्ये चापि प्रखरमतयः पुण्यराष्ट्रस्य वेदौ।
स्वीयान् प्राणान् मुदितमनसा चक्रिरे हव्यरूपाँ-
स्तेषां कीर्तिर्न भवतु पते दूषिता शत्रुभीत्या ॥३९॥

हे पतिदेव, लाला लाजपतराय, गोपालकृष्ण गोखले, बाल गंगाधर तिलक तथा और भी जो उच्च बुद्धि वाले नेता थे उन्होंने पवित्र राष्ट्र की वेदी में प्रसन्न मन से अपने प्राणों को होम दिया। उनकी कीर्ति कहीं शत्रु के भय से मलिन न हो जाये ॥३९॥

गोविन्दोऽसौ प्रियतम गुरुर्मातृभूम्यै जुहाव
स्वीयप्राणान् नहि निजदृशा पारतन्त्र्यं शशाक।
तस्य द्रष्टुं विमलचरितं गीयते भारते स्वे
मृत्वा लोके मरणरहितो राष्ट्रहेतौ हतो यः ॥४०॥

हे प्रिय, गुरु गोविन्दसिंह ने मातृभूमि के लिये अपने प्राणों का बलिदान कर दिया, परन्तु वह अपनी आंख से राष्ट्र की परतंत्रता को न देख सका। आज हमारे भारत में उसका शुभ चरित्र सब जगह गाया जाता है। वास्तव में राष्ट्र के लिये जो आदमी मरता है वह मर कर भी अमर होता है ॥४०॥

वैधव्यं चेद् दयित मिलति प्राणहान्या रणे ते
काचिच्चिन्ता न भवति तदा सङ्गमश्चावयोः स्यात् ।
स्वर्गे लोके किल सुकृतिनो वीक्षिता यत्र गत्वा
कार्यैः पुण्यैर्भुवनविदितैर्मृत्युबन्धाद्विमुक्ताः ॥४१॥

हे पतिदेव, यदि युद्ध में आपकी प्राणहानि से मैं विधवा भी हो जाऊं तो भी मुझे किसी बात की चिन्ता नहीं है। हमारा समागम उस स्वर्गलोक में होगा जहां पर संसार में प्रसिद्ध पुण्य कार्यों से लोग मौत के बन्धन से मुक्त देखे गए हैं ॥४१॥

शास्त्रेष्वेवं भवति लिखितं शत्रुभिर्युध्यमाना
मृत्वा वीरा निदधति पदं निश्चितं नाकलोके ।
स्वर्गस्याप्तिर्भवति मरणे जीवितानां यशः स्याद्
द्वाभ्यां लाभो भवति गुणितो भूतले सैनिकानाम् ॥४२॥

शास्त्रों में ऐसा लिखा हुआ है कि शत्रुओं से जूझता हुआ जो बहादुर युद्ध में मारा जाता है उसे निश्चित ही स्वर्ग मिलता है। सैनिक यदि युद्ध में मारा जाए तो उसे स्वर्ग मिलता है और यदि जीवित रहे तो यश की प्राप्ति होती है। इस प्रकार योधाओं को दोनों ओर से लाभ ही लाभ होता है ॥४२॥

मृत्योर्मुक्तिर्न नयनगता यत्र तत्र स्थितानां
श्रेष्ठे हेतौ यदि च मरणं जीवनात् सुन्दरं स्यात् ।
एवं मत्वा त्यज मम पते प्राणमोहं रणस्थो
जेता भूया अमरपदवीं वाऽऽप्नुहि त्वं विकल्पे ॥४३॥

हे पतिदेव, चाहे कोई कहीं भी चला जाये मौत से छुटकारा कहीं भी दिखाई नहीं देता है, इसलिये यदि अच्छे निमित्त के लिये मौत हो तो वह जीने से भली होती है। हे प्रिय, आप युद्ध में प्राणों का मोह छोड़ कर या तो विजेता बनो, या अमर पदवी को प्राप्त करो ॥४३॥

सौभाग्यं मे नहि रुचिकरं भीरुसिद्धस्य पत्युः
शूरस्याहं यदि च विधवा रोचते मह्यमेतत् ।
भावानेतान्निजमनसि भो धारयित्वा मदीयान्
कुर्याः कार्यं दयित समरे मातृभूमेर्हितार्थम् ॥४४॥

मुझे भीरु पति का सौभाग्य अच्छा नहीं लगता है। इसके विपरीत यदि मैं बहादुर की विधवा बनूं तो वह मुझे अधिक अच्छा लगता है। हे पतिदेव, आप अपने सरल हृदय में इन विचारों को धारण करके युद्ध में ऐसा काम करो जो मातृभूमि के लिये लाभदायक हो ॥४४॥

एत्यागारं दयित मधुरं चुम्बनं मे यदीष्टं
मा भैषीस्त्वं प्रियतम तदाऽऽलिङ्गनान्मृत्युनार्याः ।
मां वा मृत्युं चिनुहि मनसा वीरधर्माधिगामी
जित्वा शत्रुं गृहमधिगतं त्वामहं सत्करिष्ये ॥४५॥

हे पतिदेव सुनो, यदि घर आकर मेरा मधुर चुम्बन करना चाहते हो तो मौत रूपी नारी के आलिङ्गन से मत डरो। वीरों के धर्म पर चलने वाले आप मुझ या मौत में से एक को चुन लो। यदि आप शत्रु को जीत कर घर आओगे तो मैं तुम्हारा स्वागत करूंगी ॥४५॥

पुण्यं कार्यं भवति भुवने नाधिकं प्राणदानाद्
रक्षाहेतोः स्वजननभुवः कान्त गत्वा समीकम् ।
तेऽद्य स्तुत्यैः विशदचरितैः शौर्यधर्मावलिप्तैर्
मोक्षो मेऽपि प्रिय हि भविता योगिनामेत्य लोकम् ॥४६॥

हे पतिदेव, अपनी मातृभूमि की रक्षा के हेतु युद्ध में जाकर प्राण देने से बढ़कर और कोई बड़ा भला काम नहीं है। आप के शूरवीरता के धर्म से संबन्ध रखने वाले अच्छे चरित्र से योगियों के स्थान को प्राप्त करके मेरा भी मोक्ष हो जाएगा ॥४६॥

नाम स्थायि प्रिय च भुवने मानवस्य स्वकार्यैः
ख्यातं नूनं भवति सकले हेतुना नापरेण ।
एवं कार्यं सुभग भवता नाम जिह्वातले स्या-
ल्लोकानां नौ स्वजननभुवे भद्रकार्यैस्त्वदीयैः ॥४७॥

हे पतिदेव, संसार में मनुष्य का नाम अपने कार्यो से ही स्थायी तथा प्रसिद्ध होता है। आप ऐसा काम करें जिससे मातृभूमि के लिये किये गये आपके भले कामों से हमारा दोनों का नाम लोगों की जीभ पर रखा हुआ हो ।।४७।।

नाथ त्यागं विदधति च ये मातृभूमेर्निमित्तं
गाथास्तेषां सकलमनुजा आयुगं कीर्तयन्ति ।
एतत्सत्यं भवति दयितानश्वरो यो बुभूषुर्
दद्यात्प्राणान् विमलमनसा राष्ट्ररक्षानिमित्तम् ।।४८।।

हे पतिदेव, जो लोग मातृभूमि के लिए त्याग करते हैं, सब मनुष्य युग पर्यन्त उनकी कीर्ति को गाते हैं। इसमें कोई संदेह नहीं कि जो आदमी अमर होना चाहता हो उसे चाहिए कि वह राष्ट्र की रक्षा के हेतु निर्मल मन से अपने प्राणों को दे दे ।।४८।।

दातुं भीतिं स्वरिपुहृदये सिंहवद् गर्ज भर्तर्
धारासारः प्रपतति यथा "गोलि"-वर्षां विधेहि ।
हत्वानेकान् गमय परतो मृत्युभीतांस्तथाऽन्यान्
यावत् सर्वे न यमपुरगास्त्वं विरामं न कुर्याः ।।४९।।

हे पतिदेव, शत्रु के मन में भय पैदा करने के लिये शेर के समान गर्जना करो, गोलियों की ऐसी वर्षा करो जैसे मुसलाधार वर्षा पड़ती है। बहुतों को मार दो और मौत से डरे हुए दूसरों को परे हटा दो। जब तक सभी यमराज के घर न पहुंच जाएं तब तक आप विश्राम न करें ।।४९।।

निद्रा तावद् भवति विरला बीजनाशो न याव-
च्छत्रोरास्ति प्रिय च भुवने पण्डितैरुक्तमेतत् ।
एतज्ज्ञात्वा कुरु विमथनं शत्रुसङ्घस्य भर्तर्
वारं वारं न भवतु यथा वेदना मस्तकस्य ॥५०॥

पंडित आदमियों ने संसार में यह बात ठीक कही है कि जब तक शत्रु का बीजनाश न हो जाय तब तक नींद नहीं आती है। यह जान कर हे पतिदेव, शत्रुओं का इस ढंग से संहार करो कि बार बार यह सिरदर्दी न हो ॥५०॥

उष्ट्रारोही भवति च यथा शासने तस्य शक्तः
कृत्वा दक्षः प्रियतम दृढां नासिकायां सुरज्जुम् ।
एवं शत्रुं कुरु निजवशे पृष्ठतस्ते स यायाद्
बद्ध्वा हस्तौ तव च चरणौ दीनदृष्ट्येक्षमाणः ॥५१॥

जैसे ऊंट का सवार उसकी नाक में एक मजबूत रस्सी डालकर उसको अपनी इच्छा अनुसार चलाता है उसी प्रकार तुम भी शत्रु को इस ढंग से वश में करो कि वह हाथ बांधकर और आप के चरणों को दीन दृष्टि से देखता हुआ आपके पीछे पीछे चले ॥५१॥

प्राणार्थी चेत् पतति पदयोः कान्त शत्रुर्जघन्यः
सोऽप्यानेयः दयित सदनं शृङ्खलाबद्धहस्तः ।
बोधिष्यामो विविधविधिभिर् वैरिभेदं हि तस्मा-
देवं भर्तर् भवति सुविधा दुर्हृदां नाशनाय ॥५२॥

हे पतिदेव, यदि नीच शत्रु प्राणों की चाहना से आपके पैरों में पड़ जाए तो भी उसे छोड़ना नहीं बल्कि शृङ्खला से बांध कर घरको ले आएं। हम उसके अनेक प्रकार से शत्रु के भेद को मालूम करेंगे। इस प्रकार शत्रुओं का नाश करने में बहुत सुविधा मिलती है ॥५२॥

याक्च्छत्रुर् दयित पुरतो विक्रमं दर्शय स्वं
नासौ यायात् कथमपि पते जीवितः सम्मुखात्ते ।
शौर्याख्यानं भवति विफलं लक्ष्यवेधेन हीनं
याते सर्पे नहि फलवती ताडिता तस्य रेखा ॥५३॥

हे पतिदेव, जब तक शत्रु सामने है, भरपूर अपना पराक्रम दिखाओ। वह तुम्हारे सामने से किसी भी प्रकार जिन्दा न जाने पाये। उस शूरवीरता के बखान करने से क्या लाभ जो लक्ष्य को ही न बींध सके। सांप के भाग जाने पर लकीर पीटने से कोई लाभ नहीं होता ॥५३॥

सर्पग्राही रदनरहितं संविधायाहिमुग्रं
पुंसामग्रे प्रतिदिनमथ स्वेच्छया नर्तयित्वा ।
अर्जत्यर्थं प्रियतम तथा ते वशे स्यात् स वैरी
क्रीडां दृष्ट्वा भवतु मनसो मातृभूमेर्विनोदः ॥५४॥

सपेरा भयानक सांप के दान्तों को निकाल कर उसे लोगों के आगे नचा कर प्रतिदिन पर्याप्त धन कमाता है। हे पतिदेव, तुम भी उसी प्रकार शत्रु को वश में करो जिससे उसकी खेल देखकर मातृभूमि का मनोरंजन हो ॥५४॥

भूयो भूयो यदि भवति रुक् क्षीणतां याति कायः
कार्या तस्याः कुशलमतिभिः शोभनैवं चिकित्सा ।
नैवाक्राम्येत् परिचितवपुः सा पुनर्भुक्तपूर्वं
शान्तिं लब्धुं सकलवयसे मूलनाशो विधेयः ॥५५॥

यदि कोई रोग बार बार हो तो उससे शरीर दुर्बल हो जाता है। बुद्धिमानों को चाहिये कि वह उस रोग की ऐसे ढंग से चिकित्सा करें कि फिर कभी वह रोग होने ही न पावे। सदा के लिये शान्ति प्राप्त करने के हेतु रोग को जड़ से ही उखाड़ देना चाहिये ॥५५॥

स्थित्वाऽस्माभिः सह च कुटिला मित्रवन्मित्रपङ्क्तौ
दुष्टा एते स्वयमपि पते पञ्चशीलं विरच्य ।
राष्ट्रेऽस्माकं चरणमधमं धारयित्वा विनाशं
कुर्वन्त्येते वचनविमुखा निर्दयं तस्य कान्त ॥५६॥

हे पतिदेव, यह कुटिल और दुष्ट शत्रु मित्र के समान मित्रों की पंक्ति में बैठे और स्वयं ही पंचशील का निर्माण किया। परन्तु अब हमारे राष्ट्र की पवित्र भूमि पर अपना नीच पैर रख कर यह निर्दयता से अपने वचन का भंग करते हुए उस पंचशील का विनाश कर रहें हैं ॥५६॥

वाचोभङ्गं गणयति न यः प्रत्ययो बुद्धिमद्भिः
कार्यस्तस्य प्रिय न हृदये धारणीयं वचो मे ।
भूयः सोऽयं कपटवञ्चनैर्वंचयेन्नैव यस्मा-
द्धासस्तेषां भवति बहुशो वञ्चिता ये भवन्ति ॥५७॥

जो मनुष्य अपने वचन का पालन नहीं करता है बुद्धिमान् को चाहिये कि वह उसका कभी विश्वास न करे। इस मेरी बात को आप अपने मन में धारण कर लें। वह फिर कपट भरी बातों से हमें ठगने का प्रयास न करे। जो लोग बार बार ठगे जाते हैं संसार में उनकी सब जगह हंसी होती है ॥५७॥

सिंहश्चापि प्रिय सकरुणं लोकते जालबद्धो
यस्मात्तस्मात् करुणहृदयो मोचयेत् कश्चिदेनम्।
किन्तून्मुक्तो भवति स यदा हन्ति हेतुं स्वमुक्तेर्
हस्ते शत्रुर्भवति पतितो माऽवहेलां कुरुष्व ॥५८॥

शेर जब जाल में फंसा हो तो वह दयाभरी दृष्टि से देखता है कि उसे कोई उस फन्दे से छुड़ा दे। किन्तु ज्यों ही वह फन्दे से छूटता है तो पहले छुड़ाने वाले को ही खाता है। हे पतिदेव, इस समय शत्रु आप के हाथ में आया है इसकी लापरवाही मत करो ॥५८॥

कामं किञ्चिद् भवतु बलवन् सन्ति नोपेक्षणीया
एते दण्ड्या विविधविधिभिर् घोरदण्डं प्रदाय।
नालोचन्तां कथमपि पुनः शैलराजं हिमाद्रिं
विश्वासो मे रिपुविमथने सन्ति दक्षा भवन्तः ॥५९॥

हे बहादुर पतिदेव, चाहे कुछ भी हो इनको लापरवाही से जाने नहीं देना चाहिये। इन्हें अनेक प्रकार से घोर दंड दे कर इस प्रकार दण्डित करो कि यह फिर कभी भी हमारे पर्वतराज हिमालय को न देखें। मुझे पूर्ण विश्वास है कि आप शत्रु के मारने में पूरी चतुराई रखते हैं ॥५९॥

दन्तह्रासो भवतु च यथा सर्पतुल्यस्य शत्रो-
रुत्साहोऽस्य प्रिय नहि भवेद्दंशने भारतस्य ।
दन्तैर्हीनं सकलशिशवः प्रस्तरैस्ताडयन्ति
व्यालो दीनो भवति विकलो "हा ! प्रियेऽहं कथं न" ॥६०॥

सांप के समान इस शत्रु के इस प्रकार दान्त तोड़े जाएं कि फि- दूसरी बार भारत को डंग मारने का इसका हौंसला ही न हो। तोड़े हुए दांत वाले सांप को सभी बच्चे कंकरों से पीटते हैं तो दीन सांप व्याकुल हो कर मन में सोचता है कि हाय ! मैं मर क्यों नहीं जाता हूं। (यही दशा इस की होनी चाहिये) ॥६०॥

जेता भूत्वा प्रियतम रिपोरेहि मानं त्वमेवं
कृत्स्ने देशे भवतु दयिताकीर्तनं ते सुकीर्तेः ।
गर्वं कुर्यामहमपि पते कस्य भार्या भवामि
स्तुत्यः सर्वैर् भवसि यदि भो स्वागतं ते करिष्ये ॥६१॥

हे पतिदेव, शत्रु को जीतकर तुम ऐसा मान प्राप्त करो कि सारे देश में तुम्हारी कीर्ति हो। मुझे भी इस बात का गर्व हो कि मैं किस की पत्नी हूं। यदि राष्ट्र के सब लोग आपकी प्रशंसा करेंगे तो मैं निश्चय ही आपका स्वागत करूंगी ॥६१॥

पत्युः कार्यैर्भवति ललना मूर्ध्नि सीमन्तिनीनां
गौर्याः पूजा भवतु दयिताकारि या नाफला सा ।
"वीरं याचे भगवति ! पतिं मातृभूमेर्धुरीणं
नैतच्छक्यं यदि तु गिरिजे रक्ष मां त्वं कुमारीम्" ॥६२॥

पति के महान् कार्यों से ही नारी अन्य स्त्रियों की सिर-ताज कहलाती है। हे पतिदेव, मैंने बड़े कष्ट के साथ जो पार्वती की पूजा की है वह निष्फल न जाए। भवानी से मैंने इस प्रकार प्रार्थना की थी कि हे पार्वती! मुझे ऐसा बहादुर पति दो जो मातृभूमि की धुरा का भार उठाने वाला हो। यदि ऐसा संभव न हो तो आप मुझे कुमारी ही रखें ॥६२॥

एवं कृत्वा बहुविधजपं निर्जलं यापयन्ती
गौर्याः प्रीत्यै प्रियतम तदाऽतीतसङ्ख्यान्यहानि ।
स्वप्ने प्रोक्तं दयित शिवया "तेऽहमस्मि प्रसन्ना
भर्तारं त्वं मनसि निहितं लप्स्यसे मङ्क्षु पुत्रि" ॥६३॥

हे पतिदेव, पार्वती को प्रसन्न करने के लिये इस प्रकार जप करके मैंने विना जलपान के ही अनगिनत दिनों को बिताया है। तब भवानी ने मुझे स्वप्न में कहा था कि हे पुत्री! मैं तुझ पर प्रसन्न हूं, तू शीघ्र ही अपने मनचाहे पति को प्राप्त करेगी ॥६३॥

गौर्याः सत्यं भवतु वचनं हे पते प्रार्थयेऽहं
शौर्यं श्रुत्वा तव च महिला एत्य मे वेश्म कान्त ।
ईर्ष्यापूर्णा ददतु तिलकं मस्तके मे सुरम्यं
"धन्या धन्या भवसि ललने वीरपत्नी त्वमेव" ॥६४॥

हे पतिदेव, मेरी यही प्रार्थना है कि पार्वती का वचन सच्चा हो जाय और आपकी बहादुरी को सुन कर स्त्रियां

ईर्ष्या से भरे हुए मन वाली मेरे मस्तक पर सुन्दर तिलक लगा कर कहें कि हे नारी! तूं धन्य है, वास्तव में राष्ट्र में बहादुर की पत्नी तो तूं ही है ।।६४।

प्रोक्ता नारी पतिसुचरितैः सर्वतः पूजनीया
सिद्धं चैतद् भवति सुचिराद् भ्रान्तिरास्ते न काचित् ।
एवं कार्यं दयित भवता मानमेयां यथाहं
तास्मिन्नष्टे क्षणमपि पते जीवितुं कामये न ।।६५।।

हे प्रिय, पति के अच्छे चरित्र से ही नारी सब ओर पूजनीय कहलाती है। यह बात प्राचीन काल से ही सिद्ध है, इस में कोई सन्देह की बात नहीं है । आप ऐसा काम करें जिससे मेरा सब ओर मान ही मान हो । उसके नष्ट होने पर मैं पल भर भी जीवित नहीं रहना चाहती हूं ।।६५।।

सीता पूर्वं तदनु च पते कीर्त्यते रावणारिः
कृष्णः पश्चाद् भवति पुरतो राधिकाया अभिख्या ।
गौरीमुक्त्वा सकलजनता शङ्करं भाषतेऽत्र
प्राचीनेऽपि प्रिय सुमहिला लेभिरे मानमेवम् ।।६६।।

हे पतिदेव, पहले सीता का नाम बोला जाता है और फिर राम का, राधा का नाम पहले और कृष्ण का पीछे से। इसी प्रकार सब लोग पहले गौरी का उच्चारण करते हैं और फिर शंकर का । जैसे—सीताराम, राधाकृष्ण, गौरीशंकर । हे प्रिय, इस प्रकार प्राचीन काल में भी नारियों ने बड़ा मान पाया है ।।६६।।

स्वीयं धर्मं जनकतनयाऽपालयद्रामपत्नी
प्रासादात् सा वनमुपगता कण्टकान् शोधयन्ती ।
तस्याः कीर्तिः सकलभुवने चन्द्रिकेवास्ति याता
नारीधर्मः परमगहनः पालितो लाभदः स्यात् ॥६७॥

जनक की पुत्री राम की भार्या सीता ने अपने पतिव्रत धर्म का पालन किया। वह महल को छोड़कर पति के मार्ग के कांटों को साफ करती हुई वन को चली गई। उसका यश सारे संसार में चान्दनी के समान फैल गया। नारी का धर्म बहुत गहरा है। यदि इसका पालन किया जाय तो यह बहुत ही लाभदायक होता है ॥६७॥

नाहं राधा न जनकसुता वल्लभा नापि विष्णोर्
विप्रस्यास्मि प्रिय तु तनया केवलं निर्धनस्य ।
आस्तां चित्तं तव चरणयोर् हे पते यावदायुः
प्रौढः कामो भवति मम भो जीवनस्यास्य कान्त ॥६८॥

हे पतिदेव, न मैं राधा हूं, न सीता हूं और न ही लक्ष्मी हूं; मैं तो एक निर्धन ब्राह्मण की पुत्री हूं। मेरा चित्त आयु-पर्यन्त आपके ही चरणों में लगा रहे यही मेरे जीवन की सब से बड़ी कामना है ॥६८॥

भक्तिर्मेऽस्ति प्रियतम परन्त्वाश्रिताद्य प्रतिज्ञां
मां न स्प्रष्टुं प्रभवसि गृहे शत्रुहन्ता न चेत्त्वम् ।
ध्यानं देयं मम सुवचने नान्यथेदं पते स्या--
च्छाणेऽघृष्टो न भवति मणिर्मौलियोग्यो नृपाणाम् ॥६९॥

हे पतिदेव, परन्तु मेरी भक्ति ने आज एक प्रतिज्ञा कर ली है कि यदि आप शत्रु का नाश न कर सकेंगे तो मेरा स्पर्श नहीं कर सकते। मेरे वचन पर ध्यान दो, यह बदलेगा नहीं। जो मणि शाण पर चढ़ा कर साफ न की गई हो वह राजाओं के मस्तक पर लगाने के योग्य नहीं होती है ॥६९॥

**भर्तर् ज्ञातं भवति रिपवश्छद्मवेषं भजन्ते**
**धूर्ता एते सकलभुवने पूर्वमेव प्रसिद्धाः ।**
**कूटैस्तेषामतिपरिचितः सावधानो भवेस्त्वं**
**कच्चिन्न स्याद् विकटघटना कान्त जानासि सर्वम् ॥७०॥**

हे पतिदेव, यह प्रतीत ही है कि शत्रु कपट का भेष धारण करते हैं। यह तो सारे संसार में पहले ही धूर्त नाम से प्रसिद्ध हैं। उनके छल-कपट से आप को बड़ी सावधानता से परिचित होना चाहिये। कहीं कोई अशुभ घटना न घटित हो जाय, आप सब बातों को जानते ही हैं ॥७०॥

**चाराणां ताः सकलगतयः सावधानं निरीक्ष्याः**
**कूटं कृत्वा विविधवचनैर्वञ्चयन्ति प्रलोभैः ।**
**विश्वासो न प्रियतम मतः शोभनो युद्धकाले**
**संग्रामज्ञा विमलमतयः प्राक्तनाः प्राहुरेतत् ।७१॥**

हे पतिदेव, गुप्तचरों की सारी चालों को सावधानी से देखना चाहिए। यह छल-कपट करके अनेक प्रकार के वचनों द्वारा प्रभोलन देकर ठगी करते हैं। युद्ध के समय में विश्वास करना तनिक भी अच्छा नहीं होता इस प्रकार कुशल बुद्धि वाले तथा संग्राम विद्या को जानने वाले प्राचीन लोग कहते आए हैं ॥७१॥

साधोर्वेषे भवति मिलित सैनिकेष्वेव कश्चिद्
भेदं हर्तुं प्रियतम ततो गुप्तरूपेण याति।
एवंरूपा भवतु न यथा वञ्चना त्वस्मदीया
तीव्रा दृष्टिर् दयित भवता सर्वतः पातनीया ॥७२॥

कोई भेद लेने के लिए साधु के भेष में ही सैनिकों में मिल जाता है और फिर भेद लेकर गुप्तरूप से चला जाता है। इस प्रकार हमारी कोई भी ठगी नहीं होनी चाहिये। हे पतिदेव, सब ओर से तेज नज़र रखें ॥७२॥

स्वीयो भेदो यदि रिपुगतः सङ्कटे स्याम मग्नाः
शत्रुं हन्तुं प्रियतम ततो नैव शक्ता भवेम।
तस्माद् भर्तर् भव सुनियतं जागरूकोऽरिसङ्घे
हत्वा शत्रून् गृहमधिगतं त्वामहं सत्करिष्ये ॥७३॥

हे पतिदेव, यदि अपना कोई भेद शत्रु तक पहुंच गया तो हम संकट में पड़ सकते हैं और फिर उसे मारने में कभी समर्थ न होंगे। इस लिए हे पतिदेव, शत्रु के समूह में सदा सावधान हो कर रहें। शत्रुओं को मारकर तुम घर आओगे तो मैं आपका स्वागत करूँगी ॥७३॥

कुर्वन्त्येते कपटबहुलां शत्रवः कान्त मायां
धृष्टः कश्चिद् भवति पुरतः कामिनीरम्यरूपे।
अन्यश्चैवं धृतनटतनुर् जायते वा प्रत्यक्षं
नैवास्माभिः क्वचिदपि पते वञ्चितव्यो निजात्मा ॥७४॥

यह शत्रु कई प्रकार की माया को धारण करते हैं। कोई धूर्त नारी के रूप में सामने आता है तो कोई नटुए का रूप धारण करके सामने आकर खड़ा हो जाता है। हे पतिदेव, हमारी कहीं भी ठगी नहीं होनी चाहिए ॥७४॥

आयास्यन्ति प्रिय तत्र पुरो भारतीयेऽपि वेषे
येन त्वं स्या भ्रमपरिगतः सैनिकः स्वीय एव।
तेषां छद्म क्वचिदपि पते नैव हानिं विदध्या-
च्छस्त्रेणैषां क्षितितलगतान् मस्तकान् संविधेहि ॥७५॥

हे पतिदेव, वह भारतीयों के भेष में भी तुम्हारे सामने आएंगे जिससे तुम्हें भ्रम हो जाए कि यह कोई हमारा ही सैनिक है। उनका छल-कपट कहीं किसी प्रकार की हानि न करे। आप शस्त्र से इनके सिरों को काटकर धरती पर गिरा दें ॥७५॥

घस्रेऽतीते प्रिय च महिलारूपमास्थाय शत्रुर्
भ्राम्यन्नेको नयनविषयं ग्राममध्ये प्रयातः।
शङ्काऽस्माकं सपदि हृदये तस्य चेष्टासु जाता
बद्ध्वा चैनं निकटशिविरे नीतवन्तो वयं तम् ॥७६॥

पिछले दिन एक शत्रु नारी के रूप में घूमता हुआ ग्राम के बीच नजर आया। उसकी चेष्टाओं से हमारे हृदय में शंका पैदा हो गई। हम शीघ्र ही उसे बांध कर निकट की छावनी में ले गए ॥७६॥

भेदास्तत्र प्रिय च बहवोऽनावृतास्तेन गुप्ताः
सेनासङ्ख्याऽखिलगतिविधिः कर्णयोरागता नः ।
श्रुत्वा सर्वं जनरलवरो धन्यवादं चकार
ग्रामीणानां प्रियतम च ये साहसं चक्रुरेवम् ॥७७॥

उसने वहां पर शत्रु के बहुत सारे गुप्त भेद हमें बता दिये। सेना की संख्या तथा उनकी सब प्रकार की हलचल का हमें पता लग गया। छावनी का अधिकारी जनरल यह सब कुछ सुन कर बहुत प्रसन्न हुआ और ग्राम के उन सब लोगों का धन्यवाद किया जिन्होंने यह साहस दिखाया था ॥७७॥

छत्रैः सार्धं शृणु वरद ये सैनिकास्तस्य शत्रो-
रायान्त्यत्र प्रिय सुभुवि नः कर्तुमेवाव्यवस्थाम् ।
शीघ्रं हत्वाऽखिलकुचरितान् मस्तकान् वेश्मशृङ्गे
कृत्वा भर्तः सकलसुहृदो विस्मये पातयामः ॥७८॥

हे पतिदेव, शत्रु के जो सैनिक हमारी धरती पर गड़बड़ मचाने के लिये छातों के साथ उतर रहे हैं हम उन दुष्टों को शीघ्र ही मार कर उनके सिरों को काट कर घरों के ऊपर लटका रहे हैं और इस प्रकार सब बन्धुओं को आश्चर्य पैदा कर रहे हैं ॥७८॥

चिन्ताऽत्रत्या न भवतु पते संयुगे क्वापि तुभ्यं
सर्वं कार्यं प्रियतम वयं साधयामः सतर्कम् ।
सीमारक्षा भवति तव वै केवलं कृत्यरेखा
राष्ट्रस्यान्तः सकलमपि यन्निर्भरं स्त्रीषु तत्स्यात् ॥७९॥

हे पतिदेव, युद्धक्षेत्र में आपको यहां की कोई भी चिन्ता नहीं करनी चाहिये। हम यहां के सारे काम को बड़ी सावधानी से कर रही हैं। आपका काम केवल सीमा की रक्षा करना ही है। राष्ट्र के अन्दर का जो भी काम है उसे स्त्रियों के सहारे छोड़ देना चाहिये ॥७९॥

प्राचीनेऽपि प्रिय च बहवो राक्षसा एत्य मायां
चक्रुः कष्टं विविधविधिभिर्देवतानां प्रगाढम् ।
मारीचोऽसौ हरिणवपुषा वञ्चयामास रामं
केशी धृत्वा हय इव तनुं कृष्णमत्तुं दधाव ॥८०॥

प्राचीन काल में भी बहुत सारे राक्षस माया को धारण करके अनेक प्रकार से देवताओं को दुःख देते रहे हैं। मारीच नें हरिण के रूप में राम को ठगा था और केशी घोड़े का रूप धारण कर कृष्ण को खाने के लिये दौड़ा था ॥८०॥

बीजेशस्य प्रिय च सचिवो हन्तुमैच्छच्छिवाजिं
पत्रं सन्धेरफजलखलः प्राहिणोत् साहुपुत्रम् ।
धृत्वा हस्ते स निशितमसिं पापमादाय चित्ते
द्रष्टुं प्राप्तः परमकुटिलश्छद्मनैवं प्रहर्तुम् ॥८१॥

बीजापुर के सुलतान के वज़ीर अफजलखां ने साहूजी के पुत्र शिवाजी को छल से मारने के लिये सन्धि का पत्र भेजा। वह मन में पाप लिये हुए और हाथ में तेज तलवार लेकर कपट से प्रहार करने के लिये उसे देखने आया ॥८१॥

साहोः पुत्रः पटुतरशिवो नाऽभवन्मन्दबुद्धिः
सर्वामेतां कपटरचनां पूर्वमेव व्यजानात् ।
यावद् दुष्टो रिपुरफजलः कर्तुमैच्छत् प्रहारं
प्राज्ञो राजा निज''वघनखं'' तस्य कुक्षौ चकार ॥८२॥

परन्तु शिवाजी मूर्ख नहीं था, वह बहुत चतुर था उसने इस कपट की रचना को पहले ही जान लिया था। ज्यों ही शत्रु अफजलखां ने प्रहार करना चाहा तो बुद्धिमान् शिवाजी ने अपना वघनख उसके पेट में घुसेड़ दिया ॥८२॥

नारीभाग्ये न भवति पते युद्धभूमौ प्रयाणं
''टैङ्के'' स्थित्वा भयदवदना चण्डिकावद्धरिस्था ।
शत्रून् हत्वा गणनरहितान् भारमल्पं व्यधास्यं
सोऽयं खेदो मम तु सुभगार्धाङ्गिनी विग्रहे न ॥८३॥

हे पतिदेव, नारी के भाग्य में युद्धभूमि में जाना नहीं लिखा है। नहीं तो मैं शेर पर चढ़ी हुई चंडी के समान टैंक में बैठ कर, अनगिणत शत्रुओं को मार कर राष्ट्र के भार को हल्का करती। मुझे यही खेद है कि मैं युद्ध में आपकी अर्धाङ्गिनी नहीं हूं ॥८३॥

सर्वत्रैव प्रिय चरणयोश्चिह्नमाश्रित्य वर्ते
कार्यं किञ्चिन्न भवति पते यत्र नाहं सहाया ।
नैतज्ज्ञातं प्रियतम कथं बाधिका संयुगे स्त्री
पश्चात्तापो भवति बहु मेऽर्धाङ्गिनी नाहवे ते ॥८४॥

हे पतिदेव, मैं सब जगह आपके चरण-चिह्नों पर चलती हूं। कोई भी ऐसा काम नहीं जिस में मैं आपकी सहायक न हूं। मुझे यह मालूम नहीं कि स्त्री युद्ध में कैसे बाधक हो सकती है। मुझे इस बात का बहुत ही पश्चात्ताप है कि मैं युद्ध में आपकी सहायक नहीं हूं ॥८४॥

अर्धाङ्गिन्याः कठिनपदवी सार्थिका मे कथं स्या-
देषा चिन्ता तुदति हृदयं रात्रिकाले दिवा च ।
अन्यायोऽयं भवति बहुलो नीतवाँस्त्वं न भर्तः
स्नेहस्यायं न भवति विधिर्वञ्चिता शौर्यकार्यात् ॥८५॥

हे पतिदेव, मेरी अर्धाङ्गिनी की कठिन पदवी कैसे सार्थक होगी, यही चिन्ता रात-दिन मेरे हृदय को दुःखी कर रही है। आपने यह बहुत ही अन्याय किया कि आप मुझे साथ न ले गये। भला यह भी कोई प्यार दिखाने का तरीका है? आपने मुझे वीरता के काम से वंचित कर दिया ॥८५॥

व्याजेन त्वं समरमपि चेत् केनचिन्मामनेष्यः
शौर्यं श्रेष्ठं स्वजननभुवो योषितोऽदर्शयिष्यम् ।
सव्ये खड्गं दायित दधती खर्परं चापरस्मिन्
पायं पायं स्वरिपुरुधिरं तृप्तिमाप्ताऽभविष्यम् ॥८६॥

हे पतिदेव, यदि आप किसी बहाने से भी मुझे युद्धभूमि में ले जाते तो मैं अपनी मातृभूमि की नारी की श्रेष्ठ वीरता को दिखा देती। मैं दाएं हाथ में तलवार और बाएं हाथ में खप्पर लेकर शत्रु के खून को पी पी कर तृप्त हो जाती ॥८६॥

दग्धं कोपे नहि भवति यद् भारतस्याङ्गनायाः
किञ्चिल्लोके न नयनगतं नाथ जानन्ति सर्वे ।
सीतादृष्ट्या दशमुखपुरी स्वर्णलङ्का विनष्टा
दैत्यैः सर्वैः सह च कुटिलैः किं वदेयं तवाग्रे ॥८७॥

हे पतिदेव, इस बात को सभी जानते हैं कि भारत की नारी के कोप में सब कुछ ही भस्म हो जाता है। सीता की दृष्टि से रावण की सोने की लंका सारे कुटिल राक्षसों के साथ जल गई थी, मैं आप को क्या क्या बताऊं ॥८७॥

दैत्या देवैः प्रियतम यदा चक्रिरे घोरयुद्धं
साहाय्यार्थं दशरथनृपो देवतानां जगाम ।
कैकेयी सा पतिमनुगताऽऽलोकितुं तस्य शौर्यं
दर्शं दर्शं नृपभुजबलं मोदमाप्नोदमन्दम् ॥८८॥

हे पतिदेव, जब दैत्यों के साथ देवताओं का घोर युद्ध हुआ तो राजा दशरथ देवताओं की सहायता के लिये गया। तब कैकेयी भी उसकी वीरता को देखने के लिये अपने पति के साथ गई और वहां राजा की भुजाओं की शक्ति को देख देख कर उसे बड़ी प्रसन्नता हुई ॥८८॥

दैवाद् वाजी पतिरथयुतः संहतो बाणविद्धः
कष्टग्रस्तः सबलनृपतिः किङ्कृतिं न व्यजानात् ।
शीघ्रं गत्वा चतुररमणी स्कन्ध आदाय भारं
निर्विघ्नं सा दशरथरथं चालयामास सङ्ख्ये ॥८९॥

भाग्यवश पति दशरथ के घोड़े को तीर लगा और वह मर गया। तब राजा भयानक कष्ट में फंस गया और उसे कुछ पता नहीं लग रहा था कि वह क्या करे। तब कैकेयी ने शीघ्र ही आगे बढ़ कर जुए का भार कन्धे पर उठा लिया और दशरथ के रथ को युद्ध में विना विघ्न के चला दिया ॥८९॥

शौर्यं तस्या अनुपमतमं वाजिनश्चण्डरश्मेर्
दृष्ट्वाऽऽकाशे प्रियतम तदा तत्यजुः स्वां गतिं ते ।
रुद्धः सूर्यः सकलभुवनं विस्मयापन्नमासीद्
वृष्टिर्व्योम्नः शुभसुमनसामापतद् युद्धभूमौ ॥९०॥

उस कैकेयी की अद्भुत वीरता को देख कर सूर्य के घोड़ों ने आकाश में अपनी चाल को छोड़ दिया, सूर्य रुक गया और सारा संसार विस्मय में डूब गया। तब युद्धभूमि में आकाश से फूलों की वर्षा होने लगी ॥९०॥

भर्ता तस्या दशरथनृपस्तां प्रसन्नो बभाषे
भार्ये ब्रूहि स्ववरयुगलं ते प्रसन्नो ददामि ।
"राजन्! न्यासो भवतु वरयोर्मे द्वयोर्हस्तयोस्त
याचिष्येऽहं मम वरयुगं कामना मे यदा स्यात्" ॥९१॥

तब उसका पति राजा दशरथ प्रसन्न हो कर उसको बोला। हे भार्ये! तू कोई दो वर मांग ले, मैं तुझे प्रसन्न

होकर देता हूं। तब कैकेयी बोली कि हे राजन्! मेरे दो वर आपके हाथ में इमानत के रूप में रहें, जब मेरी इच्छा होगी, मैं मांग लूंगी ॥९१॥

न त्वं भूत्वा दशरथनृपो नीतवान् संयुगं मां
शौर्यं यन्मे मनसि निहितं व्यक्ततां नागतं तत्।
इच्छा त्वत्तो दयित यदि मे जागृयाद् भो वराणां
याचिष्येऽहं कथमिव पते दर्शितं नैव किञ्चित् ॥९२॥

आप दशरथ बनकर मुझे युद्ध को न ले गये। मेरे मनमें जो वीरता के भाव थे वह प्रकट न हो सके। हे पतिदेव, यदि मेरी इच्छा आप से कोई वर मांगने की हो तो मैं कैसे मांगूंगी, मैंने तो कुछ भी करके नहीं दिखाया ॥९२॥

चित्ते कार्यं भवति निहितं नैव यायात् प्रकाशं
भारस्तस्य प्रियतम तदा वर्धते नित्यमेव।
नाहं याता दयित समरं दर्शितुं स्वीयशौर्यं
सीता भूत्वा कथमिव मया नाग्रहोऽकारि तेऽग्रे ॥९३॥

मन में जो काम सोचा हुआ हो यदि उसको पूरा न किया जाए तो उसका भार दिन प्रतिदिन बढ़ता ही जाता है। हे पतिदेव, मैं अपनी वीरता दिखाने के लिये युद्धभूमि में नहीं गई। मुझे पश्चात्ताप है कि मैंने सीता के समान आप के साथ जाने का हठ क्यों नहीं किया ॥९३॥

पश्चात्तापस्तुदति हृदयं वेदना मस्तके मे
भारं शीर्षे प्रिय समधिकं चोष्ट्रभाराद्वैमि ।
नैनं वोढुं सुचिरमयि मे मानसं सक्षमं स्याद्
देह्यादेशं सपदि समरे वैरिणां मे दिदृक्षा ॥९४॥

पश्चात्ताप मेरे हृदय को कुरेद रहा है और मस्तक में पीड़ा है। मैं इस भार को अपने सिर पर ऊंट के भार से भी भारी समझ रही हूं। हे पतिदेव, मेरा मन इस भार को अधिक देर उठाने में समर्थ न हो सकेगा। मुझे आज्ञा करो, मैं युद्ध में अपने शत्रु को शीघ्र ही देखना चाहती हूं ॥९४॥

कान्ताऽस्थास्यं यदि च भवता युद्धक्षेत्रे सहाऽहं
तत्राद्रक्ष्यं सुदृढभुजयोः पाटवं तेऽरिहन्तुः ।
एषोऽभावः प्रिय तुदति मे लोचनेऽश्मेव चित्तं
नायं न्यायो भवति समरे कामिनीनां निषेधः ॥९५॥

हे पतिदेव, यदि मैं युद्धक्षेत्र में आपके साथ खड़ी होती तो शत्रुओं को मारने वाले आप की भुजाओं की चातुरी को देख लेती। यह अभाव मुझे इस प्रकार तंग कर रहा है जैसे नेत्र में पड़ा कंकर तंग करता है। युद्ध में स्त्रियों के प्रवेश पर जो रोक लगा रखी है यह कोई न्याय नहीं है ॥९५॥

सङ्ख्ये नारी कथमिव पते नार्हति ब्रूहि गन्तुं
दोषस्तत्र क्वचिदपि न मे लक्ष्यते कान्त कश्चित् ।
स्त्रीणामेतद् भवति परमं वञ्चनं पुंस्कृतं भो
नैते तस्या बलमनुपमं बोद्धुमद्यापि शक्ताः ॥९६॥

भला नारी युद्ध में क्यों नहीं जा सकती? मुझे तो इसमें कोई दोष नहीं दिखाई देता। यह पुरुषों ने स्त्री जाति से बड़ी भारी ठगी की हुई है। यह आज भी उसकी शक्ति को समझ नहीं सके हैं ॥९६॥

कच्चित् पुंसां भवतु लघुता चक्षुषोर्नैव नार्या
एतेनैव प्रिय च महिला युद्धभूमेर्निषिद्धाः ।
स्वार्थस्तेषां भवति निहितः कान्त तस्मिन्निषेधे
बाह्वोः शक्तिर्भवति महती योषितां मानवेभ्यः ॥९७॥

कहीं पुरुषों के छोटेपन का नारी को पता न लग जाय इस भाव से हो नारियों को युद्धभूमि में नहीं जाने दिया जाता। उस रोक में पुरुषों का अपना ही स्वार्थ दिखाई देता है। स्त्रियों को भुजाओं की शक्ति पुरुषों से भी बढ़ कर है ॥९७॥

जन्मादाय प्रवरपुरुषाः कामिनीभ्यः स्वयं ते
मन्यन्ते भो प्रियतम ततः स्वात्मनो दुर्बलास्ताः ।
भूमेः शक्तिर्भवति महती भूमिजानां पते वा
न्यायं चैनं स्वयमपि भवान् निश्चितं कर्तुमर्हः ॥९८॥

यह पुरुष स्त्रियों से जन्म पाकर बाद में उनको दुर्बल मानने लग जाते हैं। क्या भूमि की शक्ति बड़ी है या भूमि से पैदा होने वालों की शक्ति बड़ी है। हे पतिदेव, आप इस बात का अपने आप ही न्याय कर सकते हैं ॥९८॥

धूमादग्निर्भवति जनितो मन्यते नैनमूनं
स्वस्माद् भर्तः प्रकृतिनियमाः कीदृशाः सन्ति रम्याः।
शीर्षे स्वीये वहति पितरं सर्वदा मानहेतोर्
वह्निः पश्चाच्चलति पुरतो गर्विता याति सोऽपि ॥९९॥

आग धूंएं से पैदा होती है तो वह धूंएं को अपने से कमजोर नहीं समझती है। प्रकृति के यह नियम कितने सुन्दर हैं। आग अपने जन्मदाता उस धूम को मान के लिये सदा इस प्रकार सिर पर रखती है कि आग पीछे पीछे चलती है और धुआं गौरव के साथ आगे आगे चलता है ॥९९॥

वारंवारं बहुलपुरुषैर्भाषितः पण्डितश्चेन्-
"मूर्खो मूर्खः" प्रियतम ततो मूढतामेव याति।
दत्तं नार्यै सकलजगता फल्गु नामाबलाया-
स्तस्माज्जातं सबलमहिलामानसं दुर्बलं नु ॥१००॥

यदि बहुत सारे भले लोग किसी पंडित को भी बार बार मूर्ख कहें तो वह मूर्ख ही बन जाता है। संसार ने नारी को अबला की तुच्छ संज्ञा दे दी इस लिये स्त्री का बलवान् मन भी दुर्बल बन गया ॥१००॥

